

# श्री गुरू स्तुति



प्रकाशक

रघुनाथ ब्रह्मचारी

२०२-वली निवास, पक्की ढ़क्की

जम्मू (कश्मीर)

# ॐ गुरवे नमः

## ॐ श्री गणेशाय नमः

## ओ३म् श्री सरस्वत्यै नमः

ॐ अस्य श्रीगुरुगीता चतुर्माला मन्त्रस्य शिव ऋषि विराट् छन्दः श्रीगुरु परमात्मा देवता हं (ह्री) बीजम् सं शक्तिः क्रों कीलकम् । श्री गुरु प्रसाद सिद्ध्यर्थं पाठे (जपे) विनियोगः ।

अथ करन्यासः । ॐ हंसो सूर्यात्मेन अङ्गुष्ठाभ्यां नमः । ॐ (शं) हंसी सोमात्मने तर्जनीभ्यां नमः । ॐ हंसूं निराभासात्मने मध्यमभ्यां नमः । ॐ (हसौ) हंसै निराभासात्मेन अनामिकाभ्यां नमः । ॐ हंसौ अतनु सूक्ष्मात्मने कनिष्ठकाभ्यां नमः । ॐ हंसः अव्यक्तात्मने करतलक पृष्ठाभ्यां नमः ।

## अथ हृदयादि न्यासः

ॐ (सो) हंसा सोमात्मने सूयात्मने हृदयाय नमः ।
ओं (सों) हसी सोमात्मने शिरसे स्वाहा ।
ॐ हंसू निरंजनात्मने शिखायै वोषट् ।
ॐ हं सौ निराभासात्मने कवचाय हुं । ॐ हं सौ अतनु सूक्ष्मात्मने नेत्रत्रयाय वौषट् । ॐ हं सः अव्यक्तात्मने अस्त्राय फट् ॥

## अथ ध्यानम्

ओं नमामि सदग् रुं शान्त प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपाठस्थं मोक्षकामार्थं सिद्धये ॥
प्रन्न वधिना क्षम च सर्व देव स्व रपे नमः ।
तत्पादुका जलधारा निपुणन्ते समृद्धिनः ॥
तत्पादुका क्षालितं देहि मन्त्रवाहे गत मलम् ।
तत्क्षणादेव सज्जो मन्त्रो जायते स्फटिको मम ॥
तीर्थानि दक्षिणे पादे विद्यास्तन मुखमाश्रिता ।
पूजयेदर्चयेद्देव तत्तत्प्राधान्य पूर्वकम् ॥

हंसाभ्यां परिवृत्त पत्रकमलै–र्दिव्यैर्जगत्कारणै ।
विश्वोत्कीर्णमनेक देह निलयं स्वच्छन्दमात्मेच्छया ॥

भावैकदीपाङ्कुरं

प्रत्यक्षाक्षर विग्रहे गुरुपदे ध्यायेद्विभुं शाश्वतम् ।
विश्वव्यापितमादि देवममलं नित्यं परं निष्कलम् ॥
नेत्रोद्बुद्ध सहस्त्र पत्र कमलै लिप्ताक्षरैर्मण्डपैः ।
नित्यानन्दमयं सुखैकनिलयं सत्यं शिव सप्रभम् ॥
ध्यायेदात्म···प्रवेशकुहरे स्वच्छन्दतः सर्वतः ॥

इतिध्यानम्

ऋषिरुवाच :–
गुह्यादगुह्यतरा विद्या गुरुगीता विशेषतः ।
तत्प्रसादा······
सूत उवाच :–
कलासशिखरे रम्ये भक्ति साधन नायिकां ।
प्रणम्य पार्वती भक्तया शंकरं परिपृच्छति ॥

श्री पार्वती उवाच

ओं नमो देवदेवेश परात्पर जगद्गुरो ।
सदाशिव महादेव गुरुदीक्षां प्रदेहि मे ।। १ ।।
केन मार्गेण भो स्वामिन् देहो ब्रह्ममयो भवेत ।।१।।
त्वं कृपां कुरु मे स्वामिन् नमामि चरणौ तव ।।२।।

ईश्वर उवाच

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनाम् ।।३।।
मम रूपाऽसि देवि ! त्वं त्वत्प्रीत्यर्थं वदाम्यहम् ।।४।।
लोकोपकारकं प्रश्नं न केनापि कृतं पुरा ।।५।।
दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहम् ।।६।।
किंचित् गुरुं विना नान्यत्सत्यं सत्य वरानने ।।७।।
यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।
विकल्पं यस्तु कुर्वति स नरो गुरुतल्पगः ।।६।।
वेदशास्त्र पुराणानि इतिहासादिकानि च ।
मन्त्रयन्त्रादिविद्यानां स्मृतिरुच्चारणादिकम् ।।७।।

शिवशक्त्यागमादीनि अन्ये च बहवो मताः ।
अशब्दाऽपि समस्तानि जीवानां भ्रान्तचेतसाम् ॥१०॥

वेदशास्त्रपुराणानि कृत्वा गुरुकाम्यया ।
स्वयं लोकगुरुसाक्षात् जायते वेदतत्त्ववित् ॥११॥

यज्ञोव्रतस्तपादानं जपतीर्थं तथैत्र च ।
गुरुतत्त्वमविज्ञाय मूढस्त्वन्यरतोऽर्थतः ॥१२॥

गुरुबुद्ध्यात्मनो नाऽन्यः सत्यं सत्यं न संशयः ।
तल्लाभार्थं प्रयत्नेन कर्त्तव्य सुमनीषिभिः ॥१३॥

गूढाविद्या जगन्माया देहाज्ञानसंज्ञिता ।
ज्ञातव्या तत्प्रसादेन गुरुः शिष्येणकथ्यते ॥१४॥

देही ब्रह्म भवेत् यस्मात् तत्कृपार्थं वदाम्यहम् ।
सर्वं पाप विशुद्धात्मा श्रीगुरोः पादसेवनम् ॥१५॥

सर्वतीर्थावगाहस्य प्राप्नोति यत्फलं नरः ।
गुरुपादोदकं पीत्वा जलं शिरसि धारयेत् ॥१६॥

शोषणं पाप पङ्कस्य दीपनं ज्ञानतेजसः ।
गुरुपादोदक सम्यक् संसारार्णवतारकम् ॥१७॥

ज्ञानमूलहरणं जन्मकर्मविदारणं ।
ज्ञानवैराग्य सिद्धयर्थं गुरुपादोदकं पिबेत् ।।१८।।

गुरुपादोदकं पानं गुरुच्छिष्ट भोजनम् ।
गुरोर्मूर्तेः सदाध्यान गुरुस्तोत्रं सदा जपेत् ।।१९।।

यत्पादरेणुका नित्यं कोऽपि संसारवारिधेः ।
सेतुं बन्धयते नाथं दैशिकं तमुपास्महे ।।२०।।

गुरुक्षेत्रनिवासं च जाह्नवीचरणोदकम् ।
गुरु विश्वेश्वरः साक्षात तारकं ब्रह्मनिश्चतम् ।।२१।।

... ... ...

तीर्थराज प्रयागे सो गुरुमूर्तिः नमो नमः ।।२२।।

गुरुमूर्तिः स्मरेन्नित्यं गुरोर्नाम सदा जपेत् ।
गुरोराज्ञां प्रकुर्वीत गुरोरन्यं न भावयेत् ।।२३।।

गुरुवक्त्रस्थितं ब्रह्म प्राप्यते तत्प्रसादतः ।
गुरोर्मूर्तिः सदा ध्यानं नारापति यथाधृतम् ।।२४।।

स्वाश्रमं च स्वजातिश्च (स्वकीर्ति च) सुकृतं पुष्टिवर्धनम्
अन्यत्सर्वं परित्यज्य गुरोरन्यं न भावयेत् ।।२५।।

अनन्यश्चिन्तयन्तो मां सुलभं परमं पदम् ।
तस्मात् सर्वप्रयत्नेन गुरोराधानं परम् ॥२६॥

गुरोर्वंतत्रस्थिता विद्या गुरुभक्तया तुलभ्यते ।
त्रैलोक्ये स्फुटवक्तारो देवासुरपन्नगाः ॥२७॥

गुकारो अन्धकारस्य रुकारस्तेज उच्यते ।
अज्ञानग्रासकं ब्रह्म गुरुरेव न संशयः ॥२८॥

गुकारो प्रथमो वर्णो मायादेः गुणभासकः ।
रुकार द्वितीयं ब्रह्म माया भ्रान्ति विमोचकः ॥२९॥

एवं गुरोः पद श्रेष्ठं देवानामपि दर्लभम् ।
हा हा हू हू गुरोश्चैव गन्धर्वाद्यैश्च पूजितः ॥३०॥

एवं तेषां च सर्वेषा नास्ति तत्वं गुरोः पदं ।
आसनं शीतलं वस्त्रं वाहनं भूषणादिकम ॥३१॥

साधकेन प्रदातव्यं गुरोः सन्तोषकारकं ।
गुरोराराधनं कार्यं जिवितं वै निवेदयेत् ॥३२॥

मनसा कर्मणा वचा सद्भिराराधनं गुरोः ।
दीर्घदण्डं नमस्कृत्य निर्लोभो गुरुसन्निधौ ॥३३॥

शरारार्थं सम्प्राप्तं पुष्पपत्रं ग्रहाणि च ।
... ... ... ॥३४॥

ॐ गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुरेव परब्रह्म तस्मै श्री गुरवे नमः ॥३५॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥३६॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ॥३७॥

स्थावरं जङ्गमं व्याप्तं यत्किंचित् सचराचरम्
तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ।३८॥

चिन्मयं व्यापितं सर्वं त्रैलोक्यं सचराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥३९॥

सर्वश्रुतिशिरोरत्नं विराजेत्त्वत्पदाम्बुजम् ।
वेदान्तगर्भसूर्याय तस्मै श्री गुरवे नमः ॥४०॥

यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम् ।
सदैव सर्वं सम्पत्ति स्तस्मै श्री गुरवे नमः ॥४१॥

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम् ।
बिन्दुनादकलातीतं तस्मै श्री गुरवे नमः ॥४२॥

स्थावरं सुचिरं शान्तं जङ्गमं चरमेव च ।
येन व्याप्तं जगत्सर्वं, तस्मै० ॥४३॥

ज्ञानशक्तिः समारुढ़ः तत्त्वमाला विभूषितः ।
मुक्तिफल प्रदाता च, तस्मै० ॥४४॥

अन्यजन्म सम्प्राप्त कर्मबन्ध विद्यातिने ।
स्वात्यज्ञान प्रभावेन–तस्मै० ॥४५॥

शोषणं भवसिन्धोश्च दीपनं ज्ञानसम्पदाम् ।
गुरुपादोदकं सम्यक्–तस्मै० ॥४६॥

न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ।
तत्त्वज्ञानात्परं नास्ति तस्मै श्री गुरवेनमः ॥४७॥

मन्नाथः श्रीजगन्नाथो मद्गुरुः श्रीजगद्गुरुः ।
ममात्मा सर्वभूतात्मा तस्मै श्री गुरवे नमः ॥४८॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोर्पदम् ।
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥४९॥

गुरो आदि च अनाद्य च गुरो परम देवताम ।
गुरो तर तरं नास्ति तस्मै श्री गुरवे नमः ॥५० ।

सप्तसागर पर्यन्तं तीर्थ स्वाना धिकंफलं ।
गुरो अर्थ पराजलं बिन्दु सहस्त्रांश दुर्लभ,
तस्मै श्री गुरूवेनमः ॥५१ ।

हरौ रुष्टे गुरुस्त्रता गुरौ रुष्टे न कश्चन ।
तस्मातसर्वंप्रयत्नेन श्रो गुरोः शरणं ब्रजेत् ॥५२॥

गुरुरवे जगत्सर्वं ब्रह्मा विष्णु शिवात्मकम ।
गुरोः परतर नास्ति तस्मातसम्पूजयेत् गुरुम् ॥५३॥

ज्ञानं विनायुक्ति पदं लभते गुरुभक्तितः ।
गुरुः सामान्यतो नास्ति नेति नेतीति विश्रुतेः ॥५४॥

मनसा वचसा चैव सर्वदाऽराधयेत् गुरुम् ।
गुरुकृपा प्रसदित ब्रह्मविष्णु सदाशिवः ॥५५॥

सम्यक् तत्त्वविचारेण (प्रसदिन) केवलं गुरुसेवया ।
देव किन्नर गन्धर्व पितृयक्षाश्च चारणाः ॥५६॥

मुनयोऽपि न जानन्ते गुरुशुश्रूषणा विधिम् ।
मदाहंकार गर्वेण विद्यातप बलान्विताः ॥५७॥

संसारकुहरावर्ते घटयन्त्रे घठो यथा ।
न मुक्ता: देवगन्धर्वा: पितरा: यज्ञ किन्नरा: ।।५८।।

ऋषय: सर्वंमिद्धयर्थं गुरुसेवा पराङ्.मुखा: ।
ध्यानं श्रणु महादेवि ! सर्वानन्द प्रदायकम् ।।५९।।

सर्वसाक्षी परं नित्यं मुक्ति विशारदम् ।
श्रीमत्परंब्रह्म गुरुं भजामि श्रीमत्परंब्रह्म गुरुं वदामि
श्रीमत्परंब्रह्म गुरुं स्मरामि श्रीमत्परंब्रह्म गुरुनमामि
।।६०।।

ब्रह्मानन्दं परमसुखदं केवल ज्ञानमूर्तिम् ।
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।।
एकं नित्यं विमलमचलं सर्वधी: साक्षिभूतम् ।
भावावातीतं त्रिगुणरहितं श्री सद्गुरुं तं नमामि ।।६१

नित्यशुद्धं निराभासं निराकारं निरन्जनम् ।
नित्यबोधविदानन्दं गुरुब्रह्म नमाम्यहम् ।।६२।।

ब्रह्मबीजकर्णिकामध्यसंस्थं
सिंहासने सस्थित दिव्यमूर्तिम् ।
ध्यायेद्गुरुं चन्द्रकलावतंसं
सच्चिच अकाशामष्टवरददानम् ।।६३।

श्वेताम्बरं श्वेतविधयेपुष्पं
मुक्ताविभूषणद्युतिं द्विनेत्रम् ।
वामाङ्कपीठे स्थितद्विव्यशक्ति
मन्दस्मिप शान्तिरूप निधानम् ॥
(मन्दस्मितं पूर्णकृपा निधानम्) ॥६४॥

हृदयाम्बुजे कणि का मध्यसंस्थ
सिंहासने संस्थित दिव्यमूर्तिम् ।
ध्यायेद्गुरूं चन्द्रकलाप्रकाशं
सच्चित् सुखमिष्टवर ददानम् ॥६५॥

आनन्दमानन्दकरं प्रसन्नं
ज्ञान स्वरूपं निजबोधयुक्तम् ।
योगीन्द्रमीढय भवरो गवैद्यं
श्रीमद्गुरूं नित्यमहं नमामि ॥६६॥

यस्मिन् सृष्टि स्थितिध्वंस विधानानुग्रहात्मकम् ।
कृत्य पंचविद्यं विशेषेण भासेत तं नमः शिवम् ॥६७॥

प्रातः शिरसि शुक्लाभं द्विनेत्रं द्विभुजं गुरूम् ।
वराभयप्रदं शान्तं स्मरेत्त स्मादपूर्वकम् ॥६८॥

न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं शिवशासनम् ।
इदमेव शिवम् शिवशासनम् मम शासनतः ॥६९॥

एवंविधं गुरुं ध्यात्वा ज्ञानमुत्पद्यते स्वयम् ।
तदा गुरुप्रसादेन मुक्तोऽहमिति भावयेत् ॥७०॥

गुरुणा दर्शितो मार्गो मनः शुद्धिं च कारयेत् ।
अनित्यं खण्डयेत् सर्वं यत्किञ्चिदात्मगोचरम् ॥७१॥

ज्ञेयं सर्वमनित्यं च ज्ञानं च मन उच्यते ।
ज्ञानं ज्ञेयसमं कुर्यात् नान्योऽर्थोऽद्वितीयः क्रमः ॥७२॥

एवं श्रुत्वा महादेव गुरुनिन्दां करोतियः ।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥७३॥

यावद्देहान्तं कालोऽस्ति (श्वासोऽस्ति)
तावत् देवि गुरुं स्मरेत् ।
गुरुलोपो न कर्त्तव्यः स्वच्छन्द इति भावयेत् ॥७४॥

अहङ्कारो न कर्त्तव्यः प्रज्ञाविषये कदाचन ।
गुरोरग्रे न वक्तव्य मसत्यं च कदाचन ॥७५॥

यो वै हुङ्कृत्यै तुङ्कृत्यै गुरुनिर्जितवानितः ।
अरण्ये निर्जलेदेशे स भवेत् ब्रह्मराक्षसः ॥७६॥

मुनिभिः पन्नगैर्वापि सुरैर्वा शापितो यदि ।
कालमृत्योर्भयात् वापि गुरुः रक्षति पार्वति ।।७७।।

आसक्ता ये नराः सर्वे ह्यशक्ता मुनयस्तथा ।
गुरुशापहृताः क्षीणाः क्षयं यान्ति न संशयः ।।७८।।

मन्त्रराजमिमं देवि गुरुरित्यक्षरद्वयम् ।
श्रुतिवेदान्तवाक्येन गुरुः साक्षात् परं पदम् ।।७९।।

श्रुतिस्मृतिमविज्ञ य केवलं गुरु सेवया ।
ते वै संन्यासिनः प्रोक्ता इतेर वेषधारिणः ।।८०।।

श्रुतिमस्तक विज्ञानं केवलं गुरुसेवया ।
ते वै संन्यासिनः प्रोक्ता इतरे शमधारिणः ।।८१।।

नित्यं ब्रह्म निराकारं निर्गुणं बोधयेत् परम् ।
पूर्णं ब्रह्म निराभासं दीपो दीपान्तरं यथा ।।८२।।

गुरु कृपा प्रसदिन आत्मारामो हि लभ्यसे ।
अनन्य गुरुमार्गेण स्वात्मज्ञानं प्रवर्तते ।।८३।।

आब्रह्मस्तम्भपर्यन्तं परमात्मस्वरूपकम् ।
स्थावरं जङ्गमं चैव प्रणमामि जगद्गुरूम् ।।८४।।

वन्देऽहं सच्चिदानन्दं भेदातीतं हि सद्गुरुम् ।
नित्यं पूर्णं निराकारं निर्गुणं स्वात्मसंस्थितम् ॥८५॥

परात्परतरं ध्यायेन्नित्यमानन्दकारकम् ।
हृदयाकाशमध्यस्थं शुद्धस्फटिकसन्निभम् ॥८६॥

अङ्गुष्टमात्रः पुरुषः ध्यायते चिन्मयः हृदि ।
तत्र स्फुरति योभावः श्रुणुतकथयाम्यहम् ॥८७॥

अगोचरं तथाऽगम्यं रूपनामादिवर्जितम् ।
निःशब्दं तु विजानीयात मद्भावंब्रह्म पार्वति ॥८८॥

यथा निजस्वभावेन कर्पूरं कुंकुमादिकम् ।
शीतोष्णभाव स्वभावेन तथा ब्रह्म च शाश्वतम् ॥८९॥

स्वयं सर्वमयो भूत्वा स्थातव्यं यत्र कुत्रचित् ।
कीटो भृङ्गरिवाविशन् तथा भवति तादृशः ॥९०॥

गुरुध्यानं यथा नित्यं देही ब्रह्ममयो भवेत् ।
पिण्डे पदे तथा रूपे मुक्तास्ति नात्र संशयः ॥९१॥

-: पार्वती उवाच :-

पिण्डं तु किं महादेव पदं किं समुदाहृतम् ?
रूपं रूपातीतं चैवैतदाज्ञाहि शांकरी ॥९२॥

-: ईश्वर उवाच :-

पिण्डं कुण्डलिनी शक्तिः पदं हंसमुदाहृतम् ।
रूपं बिन्दुरितिविज्ञेय रूपातीतं निरंजनम् ॥९४॥
स्वयं सर्वमयो भूत्वा पर ब्रह्म विलोकयेत् ।
परात्परतर नान्यत् सर्वमेव निरामयम् ॥९५॥
तस्य विलोकनादेव सर्व संगविवर्जितः ।
एकाकी निःस्पृहः शान्तः स्थातव्यं तत्प्रसादतः ॥९६॥
लब्धं वाऽथ न लब्धं वा स्वल्पं व बहुलं तथा ।
निष्कामेनेव भोक्तव्यं सदा सन्तुष्ट मानसः ॥९७॥
सवर्ज्ञपदमित्याहुर्देही सर्वमयो भवेत् ।
सदानन्दे सदा शान्ते रमते यत्रकुत्रचित् ॥९८॥
यत्रेव तिष्ठति सोऽपि तद्देशो पुण्यभाजनः ।
मुक्तस्य लक्षणं देवि ! तवाग्रेकथितं मया ।९९॥
उपदेशो मय देवि ! गुरुमार्गेण दृष्यते ।
गुरुभक्तिस्तथा ध्यानं सकलं तत्प्रकीर्तितम् ॥१००॥
अनेन तदभ्वेत्कार्यं यद्वदाभि महात्मने ।
लोकोपकारकं देव्या लौकिकन तुभावयेत ॥१०१॥

इति श्री ईश्वर पार्वती संवादे
गुरु गीता सम्पूर्णम्

ॐ

ॐ नमः परं शिवाये ॐ नमः सद्गुरूवे

ॐ श्रीगुरूं शक्ति सहितं शुल्कालकार भूषितम ।
ज्ञानपूर्ण वर प्रदं प्रणमामि जगद्गुरून् ।।१।।
गुरू नामदि देवं च शैव शास्त्राधिपारगम् ।
शोभितं रत्न मालाभि प्रणमामि जगद्गुरूम ।।२।
रूक्मिणी कीलसम्युक्तं ब्रह्मरन्ध्र गतं सदा ।
त्रिलोचनं भूतिसितं प्रणमामि जगद्गुरूम । ३।।
विश्वनाथं ज्ञानमूर्ति भक्तानाम भयप्रदम ।
त्रिदेवेशि प्रणम्यत्वं प्रणमामि जगद्गुरूम ।।४।।
नरको तारण प्रदं सच्चिदानन्द विग्रहम् ।
अक्षमाला विराजन्तम् प्रणमामि जगद्गुरूम् ।।५।।
महानन्द प्रदं नृणे सच्चिदानन्द लक्षमणम् ।
योग पीठासने गतम प्रणमामि जगद्गुरूम् ।।६।।
आद्यं मध्यं तथान्तं च यस्य नास्ति कदाचन ।
साधं कानौ सदा दृश्यं प्रणमामि जगद्गुरूम ।।७।।
एवं सप्ताक्षर स्तोत्रं प्रातः कालि तुय पठेत जपायोति फलं तस्य भविष्यति न सशयः ।

इत्ये श्री गुरूस्तोत्रम् ।।

ॐ

